शास्त्राद्विदुषामर्च्चिरादिमार्गेणोद्गतानामेव मुक्तिभाक्त्वात्कथं जीवतो विदुषो मुक्तिरिति तत्राह—

ब्रह्मादीनामस्ति मुक्तिः श्रुतिभ्य-
स्तेषामेषा नार्च्चिराद्या गतिर्वः ॥
तस्मादस्या निर्गुणब्रह्मविद्या-
सम्बन्धित्वं नैषितव्यं भवद्भिः ॥ ४७ ॥

ब्रह्मादीनामिति । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत, ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे, परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमित्यादिवचनेभ्यो ब्रह्मलोकवासिनां ब्रह्मादीनामपि परब्रह्मविद्यावतां मुक्तिरस्त्येव, न च तेषां मुक्तिप्राप्तावर्चिराद्या गतिर्भवतामपीष्टा, ब्रह्मलोकादर्वागेवार्चिरादीनां स्थितत्वात, तस्मादस्या अर्चिरादिगतेर्निर्गुणब्रह्मविद्यासम्बन्धित्वं तत्फलप्राप्तिद्वारत्वं भवद्भिर्मनुष्येष्वपि नैषितव्यं किं तु कार्यं बादरिरस्य गत्युपपत्तेरित्युक्तन्यायेन सगुणविद्याफलभूतकार्यब्रह्मप्राप्तिद्वारत्वमेव तस्या एषितव्यम, एवं च सूर्यद्वारेणेत्यादिवचनमपि सगुणविद्यावद्विषयमुपेयमिति भावः ॥ ४७ ॥

ननु तयोर्द्ध्वमायन्नमृतत्वमेतीति मूर्द्धन्यनाडीद्वारोर्द्ध्वगमनस्यामृतत्वप्राप्त्युपायत्वश्रवणान्मनुष्याणां मूर्द्धगमनं विना नामृतत्वप्राप्तिरित्याशङ्क्याह—

प्राणोत्क्रान्तिर्नास्ति मूर्द्धन्यगैषां
नाड्या तस्माद् यत्रयत्रैव विद्या ॥
तत्रैव स्यान् मुक्तिरित्यभ्युपेयं
गत्युत्क्रान्ती तेन विद्यान्तरेषु ॥ ४८ ॥

प्राणोत्क्रान्तिरिति । स्वतोऽपरिच्छिन्नस्यात्मनो वस्तुतः सुषुम्नानाडीद्वारोर्द्ध्वगमनायोगात प्राणात्मकलिङ्गगमनोपाधिकं गमनं वाच्यम, न च तत्परब्रह्मविद उपपद्यते, न तस्य प्राणा उ-

त्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येतीत्यादिश्रुत्या विदुषः प्राणोत्क्रान्तिप्रतिषेधेन तदुपाधिकोत्क्रान्त्यादेरसम्भवात्, प्राप्तव्यब्रह्मणः परिपूर्णत्वेन तत्प्राप्तिरूपामृतत्वस्योत्क्रान्त्याद्यनपेक्षत्वाच्च, ततश्च यत्र यत्र देशे काले च विद्या जायते तत्र तत्रैव जीवतैव देहे मुक्तिरत्र ब्रह्म समश्नुत इति श्रुतेरभ्युपेयेत्यर्थः । तर्हि तयोर्द्धमायान्नित्यादिश्रुतेरानर्थक्यम्, नेत्याह । गत्युत्क्रान्तीति । तेन परब्रह्मविद्यायामुत्क्रान्तिप्रतिषेधेन ॥ ४८ ॥

एवमर्चिरादिमार्गानपेक्षां मुक्तेः प्रसाध्य कर्मापेक्षामपि निराकुर्वन् तस्याः केवलविद्याधीनत्वमाह—

देवादीनां नास्ति कर्माधिकारो
विद्या तेषां केवला मुक्तिहेतुः ॥
पारंपर्यात् कर्मणामुक्तहेतो-
र्विद्याङ्गत्वं सर्ववर्णाश्रमाणाम् ॥ ४९ ॥

देवादीनामिति । तथापि मनुष्याणां कर्मण्यधिकृतानां कर्मापेक्षा मुक्तिर्भविष्यति, इतरथा सर्वापेक्षा च यज्ञादिश्रुतेरिति सूत्रविरोधः स्यादित्यत आह । पारंपर्यादिति । मनुष्याणामपि ज्ञानपरिपाकाङ्गत्वेन संन्यासस्यावश्यकत्वात्सति ज्ञाने कर्माधिकारबाधान्नकर्मणेत्यादिश्रुतिविरोधाच्च न साक्षात्कर्मणां मुक्तिहेतुत्वं घटते तदिदमुक्तम् । उक्तहेतोरिति । सूत्रं तु सर्ववर्णाश्रमविहितकर्मणां साक्षान्मोक्षहेतुभूतविद्यां प्रति परंपरया साधनत्वपरम्, इतरथा अत एव चाग्नीन्धनाद्यनपेक्षेति पूर्वसूत्रेण विरोधापत्तेरित्यर्थः॥४९॥

केन द्वारेण पारंपर्यमिति वीक्षायामाह—

पारंपर्यं शुद्धिहेतुत्वहेतो-
र्यज्ञादीनां श्रूयते स्मर्यते च ॥
साक्षादेषां मोक्षहेतुत्वमेव-
मन्विच्छन्तोऽप्यागमान्न प्रतीमः ॥ ५० ॥

पारंपर्यमिति । शुद्धिपदं विविदिषोपलक्षणम् । तत्र प्रमाणमाह । श्रूयते इति । येन केन चन यजेनापि दर्विहोमेनानुपहतमना एव भवति, तमेतं वेदानुवचनेनेत्यादिश्रुतिर्योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये, कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते इत्यादिस्मृतिश्चोक्तपारंपर्ये मानमित्यर्थः । उक्तविधया कर्मणां पारंपर्येण मुक्तावुपयोग इव साक्षादुपयोगे मानाभावान्न समुच्चयसिद्धिरित्यभिप्रेत्याह । साक्षादिति ॥ ५० ॥

निरूपितप्रमेयजातस्य स्वकपोलकल्पितत्वाप्रामाणिकत्वशङ्काख्यातिलाभार्थमेतद्ग्रन्थकरणमिति मतिं च निराकुर्वन् प्रकरणार्थमुपसंहरति —

इति बहुश्रुतभाषितमुच्चकैः
श्रुतिशिरोवचनानुगतं महत् ॥
समुपदिष्टमिदं कृपया मया
प्रियमतीव हितं च मुमुक्षवे ॥ ५१ ॥

इति बहुश्रुतेति । सूत्रभाष्यटीकावार्त्तिककारा बहुश्रुतास्तैरुच्चकैस्तात्पर्येण निरूपितमित्यर्थः । महत्त्रिविधपरिच्छेदशून्यं प्रत्यगभिन्नं ब्रह्म । अतीव प्रियं निरतिशयानन्दरूपत्वात्, अतीव हितं समस्तानर्थासंस्पर्शित्वात् ॥ ५१ ॥

नन्वत्र ब्रह्मैव न निरूपितं समन्वयादेरपि निरूपितत्वादित्याशङ्क्य तन्निरूपणस्य ब्रह्मप्रमित्यर्थत्वाद् ब्रह्मैव प्राधान्येन निरूपितमित्यभिप्रेत्य तत्प्रमितेः सद्यो मुक्तिफलत्वं मुख्याधिकारिशिष्यानुभवसिद्धमिति वदन् स्वानुभवख्यापकं तद्वचनमवतारयति -

एवं समन्वयविरोधनिरासविद्या-
निष्पत्तिसाधनफलानि गुरोः क्रमेण ।
विज्ञाय वेदफलमात्मनि सर्वमेव
पश्यन्नुवाच कृतकृत्यमतिः स शिष्यः ॥ ५२ ॥

एवं समन्वयेति । वेदो वेदनं तत्फलं मोक्षं सर्वद्वैतबाध-सुखदुःखप्राप्तिपरिहाररूपम ॥ ५२ ॥

तदुक्तीरेव दर्शयति षड्भिः—

विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा-
मुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ॥
कोशात् कारणकार्यरूपविकृतात् पश्यामि निःसंशयं
क्वासीदस्ति भविष्यति क्व नु गतः संसारदुःखोदधिः॥५३॥

विद्याविग्रहमिति । स्वप्रकाशचिदेकरसमित्यर्थः । उत्तमपुरुषस्य परमात्मनः प्रतीचो भिन्नत्वादेवानवभासो नाविद्यापिहितत्वादितिशङ्कानिरासायोक्तं—प्रत्यञ्चमिति। उच्चैस्तरामित्यस्य पिहितमित्यनेन सम्बन्धः । पिधानस्योच्चैस्तरत्वं यत्नसहस्रैरभेद्यत्वम् । मुनिधिया श्रुत्यनुकूलमननिशितविवेकधिया । मुञ्जात् इषीकाच्छादकबाह्यत्वचः । कोशादन्नमयाद्यानन्दमयान्तात् । कारणकार्यरूपेणान्तर्बहिर्भावेन विकृताद्विविधतया कृतादुत्कृष्येति सम्बन्धः । कोशपञ्चकाद्विविक्तात्मनो ब्रह्मभावेन दर्शनफलं प्रकटयति । क्वासीदिति ॥ ५३ ॥

तथापि द्वैताभासस्यासम्भावितस्यापि प्रतीतेर्जीवत एव मुक्तिरनुभवसिद्धेत्याह—

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि निष्कलचिदेकवपुष्यनन्ते ॥
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥ ५४ ॥

पश्यामीति। प्रतिभासमानद्वैतस्यार्थक्रियासामर्थ्यं निवारयति । दग्धेति ॥ ५४ ॥

नन्वद्वैतदर्शने सति कथं तद्विरुद्धद्वैतदर्शनानुवृत्तिस्तदभावे वा कथं जीवन्मुक्तिरित्याशङ्क्याद्वैतस्य वास्तवत्वेन द्वैतस्यावास्तवत्वेनानुभूयमानत्वान्न किं चिदनुपपन्नमित्याह—

अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीव वीक्षे ॥
एवं च जीवनमिव प्रतिभासमानं
निःश्रेयसोऽधिगमनं च मम प्रसिद्धम् ॥ ५५ ॥

अद्वैतमिति । अद्वैतं साक्षादनुभवतः कदाचिद्भासमानमपि द्वैतं न पूर्ववद्भातीत्यत्र निदर्शनमाह । अहिनिर्ल्वयनीवेति । अहिनिर्मोको हि त्यागात् पूर्वमाहिनाऽहमित्यत्र प्रतिपन्नस्त्यागानन्तरं तदभिमानरहित एव प्रतीयते, तथा शरीरादिरूपे द्वैते पूर्ववदहं ममाभिमानं विहाय मिथ्यैवेदं भातीति पश्यामीत्यर्थः । मिथ्यात्वेन निश्चितद्वैतदर्शनानुवृत्तौ फलितमाह—एवंचेति ॥ ५५ ॥

विद्यामहिम्ना मदपकारकं निर्मूलमेवोच्छिन्नमिति तां प्रशंसति—

अद्वैतबाधकमभून् मम यद् द्वितीय-
मद्वैतमस्य बत बाधकमेव जातम् ॥
मोहाद् द्वितीयमपबाधकमस्य विद्या-
सामर्थ्यतोऽद्वयनिबर्हणमद्वितीयम् ॥ ५६ ॥

अद्वैतबाधकमिति । इदानीमपि पूर्ववदेव द्वैतमेवाद्वैतबाधकं किन्न स्यादित्याशङ्क्य द्वैतस्याऽलोकमोहबलावष्टम्भेनाद्वैतबाधकस्य दुर्बलत्वादद्वैतस्य तु परमार्थवस्तुत्वगाहिविद्यासामर्थ्यावष्टम्भेन बलवत्त्वान्मैवमित्याशयेनाह ।मोहादिति। अस्य अद्वैतस्य ॥ ५६॥

निर्मुक्तमात्मानं दृष्ट्वा पूर्वमनुभूतसंसारं स्मरन् तत्र स्वस्योत्पन्नामाश्चर्यधियं प्रकटयति—

आश्चर्यमद्य मम भाति कथं द्वितीयं
नित्ये निरस्तनिखिलाशिवचित्प्रकाशे ॥
आसीत् पुरेति किमिमाः श्रुतयो न पूर्वं
येन द्वितीयमभवत्तिमिरप्रसूतम् ॥ ५७ ॥

आश्चर्यमिति । किमत्राश्चर्यं वस्तुत उक्तरूपे परात्मन्यज्ञानाद् द्वैतरूपानर्थोपपत्तेरित्याशङ्क्याज्ञाननिवर्तकतत्त्वधीजनने नि-

रपेक्षकारणेषु वेदान्तवाक्येष्वज्ञानादिसिद्धेषु ज्ञानाभावादज्ञानानुवृत्त्या द्वैतानुवृत्तिरित्येतदप्याश्चर्यमेवेत्याह । किमिमा इति ॥५७॥

इदानीं पूर्वं श्रुतिवाक्येषु सत्स्वप्यन्वयव्यतिरेकाभ्यां तत्त्वबोधाभावे कारणं निश्चित्याज्ञानादि सम्भावयन्नाश्चर्यधियं त्यजति ।

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुरासीत् ।
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः ॥५८॥

त्वत्पादपङ्कजेति । पूर्वं संसारं निर्वेदपूर्वकं त्वादृशगुरूपसत्त्यभावात्सत्स्वपि वेदान्तवाक्येषु गुरूपदेशाधीनतत्त्वबोधाभावादज्ञानाधीनद्वैताभिनिवेशेनाद्वैतं परमार्थं सदप्यसत्कल्पमभूत्, इदानीं तु गुरुप्रसादलब्धतत्त्वबोधेनाद्वैतात्मतत्त्वमेव सदास्ति भ्रान्तिमात्रसिद्धं तु द्वैतं कालत्रयेऽप्यसदिति निश्चितमित्यर्थः ॥५८॥

आत्मलाभात्परस्य लाभस्याभावात्तं प्रापितवतो गुरोस्तदनुरूपप्रत्युपकाराभावाद्भक्तिपुरःसरं गुरूपासनमेव यावदायुर्मया कार्यम्, तावतापि तत्तोषो भवेदित्यभिप्रेत्याह—

यस्मात् कृपापरवशो मम दुश्चिकित्सं
संसाररोगमपनेतुमसि प्रवृत्तः ॥
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमप्युपासे ॥५९॥

यस्मात्कृपेति ॥ ५९ ॥

साधिकारिविषयप्रयोजनां स्वकृतिमुपसंहरन् तस्या मुमुक्षुभिरुपादेयतां सूचयन् तस्याः सान्वयसंज्ञामाह—

संक्षेपशारीरकमेव मेतत्
कृतं परिव्राजकमुक्तिहेतुः ॥
गुरुप्रसादात् परिलभ्य तत्त्वं
त्रयीशिरस्तत्त्वनिवेदनाय ॥ ६० ॥

संक्षेपेति ॥ ६० ॥

तां कृतिं गङ्गासाम्येन स्तुवन् तस्या मङ्गलं प्रार्थयते—

अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या
चरणकमलधूलिग्राहिणी भारतीयम् ॥
घनतरमुपघातं श्रेयसः श्रोतृसंघात्
सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥६१॥

अविरलेति । नानावृत्तात्मकत्वाद्बहुविधपदविन्यासक्रमवतीत्यर्थः । पद्मनाभस्य चरणकमलयोर्धूलिग्राहिणी श्रोतृसंघात् श्रेयस उपघातं मार्ष्टु इत्यन्वयः ॥६१॥

ग्रन्थस्य साम्प्रदायिकत्वं दर्शयितुं गुरोः स्वस्य च नाम निर्दिशन्ग्रन्थोत्पत्तिकालं दर्शयति—

श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः
सर्वज्ञात्मगिराङ्कितो मुनिवरः संक्षेपशारीरकम् ॥
चक्रे सज्जनबुद्धिवर्द्धनमिदं राजन्यवंशे नृपे
श्रीमत्यक्षतशासने मनुकुलादित्ये भुवं शासति ॥६२॥

श्रीदेवेश्वरेति ॥६२॥

अन्तेऽपि भगवन्नमस्काररूपं मङ्गलमाचरति—

भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ॥
तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥६३॥

इति श्रीसर्वज्ञात्ममुनिविरचिते संक्षेपशारीरके फललक्षणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

भुजङ्गमाङ्गेति ॥ ६३ ॥

इह योऽस्ति विमोहयन् मनः परमानन्दघनः सनातनः ।
गुणदोषभृदेष एव नस्तृणतुल्यो यदयं स्वयं जनः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीकृतायां संक्षेपशारीरकटीकायां चतुर्थोऽध्यायः ॥

समाप्तश्चायं ग्रन्थः । शुभमस्तु सर्वजगताम् ।